# निवेदनम्

इदं "राष्ट्ररत्नम्" मुक्तककाव्यं सहृदयपाठकानां सेवायां प्रस्तुतमस्ति । चिरकालादियमिच्छाऽऽसीद् यत् संस्कृतभाषायां गेयवृत्तेषु स्वराज्यस्य देवानां राष्ट्ररत्नानां पावनं जीवनं संक्षेपेण लिखेयम् । प्रभो प्रेरणयाऽनुग्रहेण च ममायमभिलाषः परिपूर्णोऽभवत् । महाकाव्यस्य नैषधस्य पंक्तिभिराभिरहं प्रेरितोऽभवम्—"वाग्जन्म वैफल्यमसह्यशल्यं गुणाधिके वस्तुनि मौनिता चेत् ' अतोऽहं" नैषधस्य महाकाव्यस्य रचयितारं महाकविं हर्षं प्रति हार्दिकीं श्रद्धां प्रकटीकरोमि ।

अस्य काव्यस्य लेखनस्य प्रोत्साहं यद्यपि मह्यमनेके सहृदया विद्वांसो दत्तवन्तः, परं तेषु कविरत्न श्री प्रभुदत्त स्वामी—श्री अमीरचन्द्र शास्त्री "इत्येतौ विशेषतः उल्लेखनीयौ स्तः । इमौ सत् समालोचकौ भूत्वा अस्य काव्यस्य संशोधनं कृतवन्तौ । अतस्ताभ्यां मे नतिततयः सश्रद्धं विलसन्त्वनुरागम् । श्री त्रिपाठी सुधाकराचार्या अपि मे सत्प्रेरकाः सन्ति ये स्वकीय "वतत" नाम्नि मासिकपत्रे मम काव्यस्य कतिपयश्लोकान् प्रकाश्य मेरठ विश्वविद्यालये च मामकार्यं स्वकीयकवितापाठनस्यापि महत्त्वमवसरं प्रदाय मामनुसाहसम्पन्नं कृतवन्तः । अतः सुधाकराचार्या महानुभावा मे धन्यवादार्हाः । महान् हर्षविषयोऽस्ति यत् "शिक्षा तथा समाजकल्याणमन्त्रालय शिक्षा विभाग भारत सरकार" अस्य काव्यस्य प्रकाशने मह्यं षष्टि प्रतिशत द्रव्यप्रदानस्य घोषणां कृतवान् ।

अस्य काव्यस्य प्रकाशकाः श्री रतिराम शास्त्रिणः मयराष्ट्रस्थितसाहित्य भंडाराध्यक्षा अपि च तत्तनूजौ "राजकिशोरसतीशकुमार शर्माणौ चापि मे शतशोधन्यवादार्हाः सन्ति । ये स्वकीयोदारतया संस्कृतसाहित्यस्य प्रेम्णा च मह्यमाश्रयं प्रदाय काव्यमिदं प्रकाशितवन्तः ।

एषां महानुभावानां गुणग्राहकतां वीक्ष्य कस्यापि कवेरिदं सुभाषितं स्मर्यते मया—"नागुणी गुणिनं वेत्ति, गुणी गुणिषु मत्सरी । गुणी च, गुणरागी च विरलः सरलो जनः" ।

अन्ते च ममैष मनोऽभिलाषो यदिदं राष्ट्रभक्तिपूर्णं मुक्तककाव्यमधीत्य पाठका भारतराष्ट्रस्य जागरूकाः प्रहरिणो भवेयुरिति ।

काव्यमिदं कीदृशमस्ति अस्य मूल्यांकनं तु सत्काव्यमर्मज्ञा एव करिष्यन्ति ।

"आपरितोषाद् विदुषां न साधु मन्ये-प्रयोग विज्ञानम्' ।


विदुषां वशंवदः

६ ११. ७३ यज्ञेश्वर (शास्त्री)

नवजीवन किसान कालिज

मवाना (मेरठ)

# विषय सूची

# ग्रन्थकर्तुः परिचयः

राष्ट्ररत्न प्रणेतृणा श्रीमच्छास्त्रि प्रवराणा श्री पण्डितयज्ञेश्वरमहाभागाना पुण्यपरिचयमारचयितुं नूनं मे हृदि समुल्लसति कोऽप्यपूर्वं आनन्दसन्दोहोद्रेकः।

इमे महानुभावा उत्तरप्रदेशे मयराष्ट्र-मण्डलान्तर्वर्तिनि हस्तिनापुर निकषा मोरना नामनि गुणिग्रामैग्रामैमहोज्ज्वले सुप्रतिष्ठितस्य विप्रवरिष्ठस्य कौशिक गोत्रोत्पन्नस्य वशावतंसस्य वैद्यराज-श्री लक्ष्मी नारायणशर्मण श्री "लाडो नाम्न्या धर्मपत्न्या गर्भशुक्तितो मुक्ताफलोपमोवैक्रमे १९७२ सम्वत्सरे आषाढमासेपुण्यतिथौ द्वितीयाया जनिलेभिरे। शैशव एव पञ्चमे वर्षे जनन्येतेषा परलोकमव्रजत्। प्रारम्भिकी शिक्षा क्रैस्त १९२६, १९२७ तमेऽब्दे मवाना खेटके सञ्जाता। चतुर्दशवर्षवयसि मातृस्नेह विरहेण पितुरत्युपेक्षया च गेह विहायेतस्ततोऽटाट्यमाना सिकन्दराबादगुरुकुलवर्षमेकमुषित्वा, तदनु-नैकसंस्कृतसद्मसु विद्याध्ययन कांक्षयाऽधीयाना कुशाग्रधियो नियति प्रातिकूल्येऽपि स्वल्पेनैव कालेन गढमुक्तेश्वर विद्यालयात्प्रथमा परीक्षामुत्तीर्णवन्त। क्रैस्त १९३१ तम एते पद्भ्या बदरीनाथ-केदारनाथयात्रा विधाय कांश्चित्मासान्हृषिकेशाद्यास्पदेषु यापयामासु पुनश्च क्रैस्त १९३२ तमाब्दात् १९३६ तमाब्द यावल्लवपुर, अमृतसर, कर्तारपुर, जालन्धरप्रभृतिपुपत्तनेषु सरस्वतीमुपास्यमाना शीतलामन्दिरसंस्कृतमहाविद्यालयात्पञ्जाबविशारदतया शास्त्रिपरीक्षामकार्षुं। तदनन्तरञ्च १९३७ तमे जेहलमगुरुकुले छात्रानध्यापयामासु भूयश्च पोठोहार गुरुकुले पदवाक्य प्रमाणपारावारीणस्य दर्शनकेसरिणो योगिन आचार्य मुक्तिराम शर्मण सकाशात् १९३८ तमे समामपि निगमागमसरणिमधिगत्य संस्कृतसाहित्यपाथोनिधिमन्थनोत्था सुधामास्वादयन्तो नून गीर्वाणवाणीपारदृश्वानः समपद्यन्त। अत्रार्थे तन्निर्मितमिद राष्ट्ररत्न पुस्तकमेव आगत्य प्रमाणमिति को नाम नाङ्गीकरोति। अस्मिन् हि ग्रन्थरत्ने प्रमुख राष्ट्र नायकाना चारित्र्य सुललितया सरसया भावशालिन्या सुप्रवाहया सरलया पद्यात्मकभावयोपस्थापितवन्त काव्यसरणिरतिरमणीया हृदयङ्गमा च विद्यते तस्यामेव सस्यायामध्यापनविधेयमपि चक्रुः। क्रैस्त १९३९ तमाब्दस्य पूर्वार्द्धे भागे कैम्बलपुर समाजे पौरोहित्यकार्यं विधायोत्तरार्द्धे हैदराबादान्दोलने षण्मासाना कारागारयातना विषेहिरे क्रैस्त

१९४० तमाब्दात् १९५० तमं यावत्स्वतन्त्राध्यापनविधिना जीविकामकुर्वन्। यदि च "भवाना कलाँ" ग्रार्यसमाजस्य पौरोहित्यकार्यञ्चावर्ततनिह समाजमुभुपाञ्चिकीर्षया व्यदधु । अधुना त्रैस्त १९५० तमाब्दात् भवाना नगरस्थे नवजीवनविसानमाध्यमिव विद्यालये सरस्वती सेवन्ते शास्त्रिवर्या देव दयानन्द नामक खण्डकाव्यमपि मनोहरं ललित ललितै श्लाघनीयं प्राञ्जलैः पदविन्यासैः हिन्दीभाषाया व्यरचि । नैकविद्वत्परिषत्सु स्वरचितमहृदयहृदयानुविद्धवित्त सुधारसेन रसिकाना मनासि रेभिरे रमन्ते च । नानाभिनन्दपत्राणि विरच्यभूरिप्रशसा प्रतिष्ठाञ्च विद्वत्सभासु प्रापु । महानुभावाना श्रीमता शास्त्रिवर्माणा विशिष्टा-सदाचारपद्धति । वचोमाधुर्यगति अभिनवसस्कृत गीतिरतिश्च क दर्शक प्रेक्षकञ्च नात्मसात्करोतीति मन्ये सम्प्रति ग्रभी विम सरलस्वाभावा समाजसेवका सस्कृतसाहित्यनिर्माणतत्परा एवेति सततमनुभवामि मनसा चाभिनन्दामि चिरायुष्याय चैषा भगवन्तमुपस्तौमीति ।

आचार्य खजानदत्त

२६ ६ ७३ बुलन्दशहरमण्डलान्तर्गत गुरुकुल सिकन्दराबादस्थ

ॐ

वन्दामहेनिगमकाव्यमहाकवीन्द्रम्

# * राष्ट्ररत्नम् *

## १ महारानी लक्ष्मीबाई

या सप्त-पञ्चाश इहेशुवर्षे,
लक्ष्मीः प्रजाता 'पितुरेकपुत्री ।'
दुर्गेव वीरा प्रण-पूर्ति-निष्ठा,
झांसी-सुराज्ञी प्रथिता पृथिव्याम् ॥१॥

हिन्दी—जो सन् १८५७ ईसवी में पिता की एकमात्र सन्तान दुर्गा देवी के समान, अपनी प्रतिज्ञा-पालन करने में दृढ़ झाँसी वाली रानी के नाम से विख्यात, पृथ्वी में उत्पन्न हुई।

गृहीतशस्त्रास्त्र-सुशिक्षणा या,
पितुर्गृहेऽवर्धत चन्द्रिकेव ।
तयाऽस्त्र-शस्त्राणि सखित्वमापुः,
सदैव तैः सा चिरमत्र रेमे ॥२॥

हिन्दी—जिसने (बचपन) में अस्त्र-शस्त्र का प्रशिक्षण प्राप्त कर लिया था, वह पिता के घर चन्द्रमा की चाँदनी की भाँति-दिन पर दिन बढ़ने लगी। उसके साथ सभी अस्त्र-शस्त्रों ने मित्रता प्राप्त कर ली, वह इस लोक में उनके साथ ही चिरकाल तक सदा क्रीडा करती रही।

तस्या विचित्ररचना शिशुकाल खेला,
क क चकार न जन गुणबद्धरागम् ।
साऽत्रोटयत् सपदि कृत्रिमदुर्गवृन्द-
लक्ष्य चल क्वचिदवेधयदाशुगेन ।।३।।

हिन्दी—उसकी विचित्र अनेक प्रकार की शिशुकालोचित क्रीडा ने गुणों से प्रेम करने वाले किसको मोहित नहीं किया था। वह शीघ्रता से बनावटी किलों को तोड देती थी, और कहीं हिलते हुए निशाने को (बाण से) बींध देती थी।

तीक्ष्णासिना सकृदसौ प्रलुलाव वृक्ष,
कुन्तेन सिंह मृगया तुमुलाञ्चकार ।
आरुह्यतीव्रतुरग प्रचचाल दूर-
सा नित्यमेषु रमते स्म रुचि वहन्ती ।।४।।

हिन्दी—वह एक बार में ही तेज तलवार से वृक्ष को (जड) से काट देती थी, कभी भाले से भयकर शेर का शिकार खेलती थी, (कभी) तेज घोडे पर चढकर दूर दूर तक दौडती थी, वह इन (उपरोक्त) कार्यों में रुचि लेती हुई प्रतिदिन रमी रहती थी।

राणाप्रताप-शिववीरकथा समस्ता,
सा नित्यमेव रटति स्म सुखोपविष्टा ।
गीता पपाठ च जगौ रणधीरगाथा,
सा वीरपूजनरता विरता रतिभ्य ।।५।।

हिन्दी—वह राणा प्रताप और वीर शिवाजी की समस्त जीवनी को सुख पूर्वक बैठकर कण्ठस्थ याद करती थी। (और) गीता तथा रणवीरों की कहानियों को पढ़ा करती थी, (वह इस प्रकार) वीरों की पूजा में लगी रहती थी (और) श्रृंगार साहित्य से पृथक् रहती थी।

गृहाङ्गण स्वं समराङ्गणं सा,
प्रोवाच नित्यं समरैकताना।
क्षतात् किल त्रायत इत्युदग्रः,
शब्दश्च तत्राऽन्विततामवाप ॥६॥

हिन्दी—वह युद्ध के लिए एकमात्र तत्पर हुई युद्धस्थल को ही अपने घर का आँगन कहती थी, विपत्ति से बचाने वाले को क्षत्रिय कहते हैं, और वह उन्नत क्षत्रिय पदवी लक्ष्मीबाई को पाकर सार्थक हुई।

पितुर्गृहात् सा पति-गेहमाप्ता,
सौभाग्य-सौख्यं तु चिरं न भेजे।
हा हन्त! दैवं करुणा विहीनं,
जहार तस्या पतिमाशु सौम्यम् ॥७॥

हिन्दी—वह पिता के घर से पति के घर पहुँची, परन्तु सौभाग्य का सुख चिरकाल तक न प्राप्त कर सकी। हाय! निर्दयी भाग्य ने उसके विनम्र पति को (उससे) शीघ्र ही छीन लिया।

हा! भर्तृहीना, निजपुत्रहीना,
सा यौवने शोकमशेषमाप्ता।
धृत्वा धृतिं सा विधि-दत्त-दुःखं-
कथं कथञ्चिच्च शशाक सोढुम् ॥८॥

हिन्दी—हाय! पति विहीन, और अपने निजी-पुत्र से हीन उसने यौवन काल में (ही) सम्पूर्ण शोक प्राप्त कर लिया। फिर वह जैसे तैसे दैव के दिये हुए दुःख को धैर्य धारण करके सहन करने में समर्थ हो सकी।

तस्याः स्वराज्य खलु वर्धमानं,
गौराङ्गराजश्च तदाऽऽचकांक्ष।
अनाथ-रक्षा-व्रत-तत्परा ता,
सव्याजमूचे निजराजनीतिम् ॥९॥

हिन्दी—निश्चय से उस समय अंग्रेज-शासक उसके राज्य को हड़पने की इच्छा करने लगा, वञ्चना से भरी अपनी उस राजनीति की अनाथों की रक्षा के व्रत में तत्पर रहने लगा।

कदापि ते दत्तकपुत्र एष,
नैवार्हतीदं किल राज्यमाप्तुम्।
अतः परं सर्वमपीदमस्मद्-
गौराङ्ग-राज्याधिकृतं तव स्यात् ॥१०॥

हिन्दी—तुम्हारा यह गोद लिया पुत्र कभी भी तुम्हारे राज्य को प्राप्त नहीं कर सकता। इसलिये आज से लेकर तुम्हारा सारा राज्य अंगरेजी राज्य के अधिकार में हो गया है।

निशम्य राज्ञी 'डलहौजि' वाक्यं,
पादाहता प्राह भुजङ्गमीव।
"यावत् कृपाणो नु ममाग्रहस्ते,
तावन्न ते यास्यति पूर्तिमोहा" ॥११॥

हिन्दी—रानी डलहौजी के वाक्य को सुनकर पैरों से ठुकराई हुई सर्पिणी की भाँति बोली। "जब तक मेरे हाथ में यह कृपाण है, तब तक तुम्हारी यह इच्छा पूरी नहीं होगी।

ततश्च तस्या वदनाम्बुजं तत्,
क्रोधेन कालाग्नि-समं प्रजातम्।
वीरस्य, रौद्रस्य भयानकस्य,
चिह्नैः प्रदीप्तं त्वरितं बभूव ॥१२॥

हिन्दी—इसके बाद उस रानी का वह मुख कमल क्रोध से प्रलय की अग्नि के समान (लाल) हो गया। वीररस, रौद्ररस और भयंकर के चिन्हों से वह (मुख) शीघ्र ही चमक गया।

करौ कृपाणग्रहणस्वभावौ,
सम्पादितौ यौ किल मुग्धबाल्ये ।
काले कराले समुपागते तौ,
पुनस्तया तद् ग्रहणे नियुक्तौ ॥१३॥

हिन्दी—उसने अपने जिन दोनों हाथों को अब युवावस्था में तलवार के ग्रहण करने के स्वभाव वाले बनाये थे, कुछ ही समय बीतने पर फिर उसने उन्हीं दोनों हाथों को तुरन्त तलवार के सम्भालने में लगा दिया ।

कृपाणहस्ता तुरगाधिरूढा,
दुर्गेव दुर्गारिषु चेष्टमाना ।
विद्युत्प्रवेगादसि-चालनात् सा,
नहि क्षणायापि दधे विरामम् ॥१४॥

हिन्दी—कृपाण हाथ में लिये हुए, घोड़े पर चढ़ी हुई, (झाँसी) के दुर्ग के शत्रुओं पर दुर्गा देवी के समान चेष्टा करती हुई, बिजली जैसे वेग से तलवार को घुमाती हुई, वह तनिक भी नहीं रुकी ।

सा पृष्ठदेशे स्वसुतं बबन्ध,
जग्राह वल्गाग्रमहो मुखेन ।
दोर्भ्यां कृपाणद्वय-शोभिताभ्यां,
शत्रून् समुत्सारयितुं-प्रवृत्ता ॥१५॥

हिन्दी—उसने अपनी कमर पर अपने गोद लिये पुत्र को बाँध लिया, और अपने दमकते हुए मुख से (घोड़े की) लगाम पकड़ी, कृपाण से शोभायमान दोनों हाथों से (वह) शत्रुओं को मारकर भगाने लगी ।

"स्वमातृभूमेः परिरक्षणाय,
स्वर्गप्रदं स्यान्मरणं नराणाम् ।
इति स्म धीरा वदति स्ववीरान्,
सतर्जनीतर्जनमीरयन्ती" ॥१६॥

हिन्दी—वह धैर्य शालिनी रानी तर्जनी अंगुली से तलवार पर अपने सैनिकों से बराबर यह कहती थी, "अपनी मातृभूमि की रक्षा के लिए वीरों का युद्ध में मरना उन्हें स्वर्ग प्रदान करता है"।

झांसी-राज्ञया रण समुचितां घोषणां तत्र वीराः,
श्रावं श्रावं समरजयिनः सगता युद्धभूमौ।
शस्त्रैरस्त्रै निजरिपुजनान् हन्तुमारेभिरेते,
देश-प्रेम्णे जुहवुरपरे हव्यवज्जीवनञ्च ॥१७॥

हिन्दी—झाँसी वाली रानी की इस युद्ध के उपयुक्त वीर घोषणा को सुन-सुनकर सभी युद्ध-विजयी वीर युद्धभूमि में इकट्ठे हो गये। वे अपने तेज शस्त्रों से शत्रुओं को मारने लगे और कुछ वीर योद्धाओं ने देश-प्रेम के लिये अपने प्राणों की आहुतियाँ भी दे दीं।

सेनापति "बोकर" नामधेयो,
राज्ञ्याः कृपाणेन कृतांगभङ्गः।
पलाय्य कुत्रापि निलीय तस्थौ,
भानोर्मुखं पश्यति किं दिवान्धः ॥१८॥

हिन्दी—बोकर, नामक अंगरेज सेनापति रानी की तलवार के वार से अङ्गभङ्ग हुआ दौड़कर कहीं छिपकर बैठ गया। क्या उल्लू सूर्य के प्रकाश को देख सकता है?

नाम्ना स्मिथश्चाङ्गल सैन्यनेता,
दोर्म्यां कृपाणौ परिचालयन्तीम्।
लक्ष्मीं प्रवीरां द्विभुजामपीमां-
चण्डीमिवानेककरां ददर्श ॥१९॥

हिन्दी—"स्मिथ" नामक अंगरेज सेनापति ने दोनों हाथों से कृपाण चलाती हुई, भयकर, दो हाथों वाली, उस वीर लक्ष्मीबाई को अनेक हाथों वाली के समान देखा।

एकैव रच प्रगति विविधिभिः सर्वतो विस्फुरन्ती,
नैकेव स्वैश्चपल-चपलैश्चन्द्रहास-प्रहारैः ।
अश्वस्था सा दिशि दिशि च सा पृष्ठतः सा पुरः सा,
मार्गे मार्गे समर-भुवि सा शत्रुभिस्तत्र दृष्टा ॥२०॥

हिन्दी—(वह) अकेली ही अपने तीव्रगति के प्रहारों से चारों ओर चमकती हुई, अपने चंचल तलवार के प्रहारों से अनेक सी प्रतीत होती हुई, घोड़े पर चढ़ी हुई (भी) वह मार्ग मार्ग में वह, पीछे और सामने वह (रानी) (ही) सम्पूर्ण युद्धभूमि में शत्रुओं के द्वारा देखी गई।

रणाङ्गणे कृत्तशिराश्च कश्चिद्,
करोद कश्चिद् विनिकृत्तबाहुः ।
पादेन खञ्जो नयनेन काणो-
विघ्नोनसाऽदृश्यत कोऽपि तत्र ॥२१॥

हिन्दी—युद्धभूमि में कोई कटे हुए सिर वाला था, कोई कटी हुई भुजा वाला (होकर) रुदन कर रहा था, (कोई) पैर से लगड़ा, (कोई) नेत्र से काणा कोई नकटा दिखाई दिया।

चीत्कारशब्देन हताहतानां-
रणाङ्गणं तत् तुमुलं बभूव ।
गौराङ्गसेनासुभटाश्च सर्वे,
पराभवं प्रापुरत्याकुलास्ते ॥२२॥

हिन्दी—घायल (शत्रुओं) के चीत्कार (चिल्लाने से) वह युद्धस्थल डरावना हो गया था, अगरेज-सेना के सभी वीर वहाँ भयभीत हुए, परास्त हो गये।

राज्याः समे सामरिकाः समुत्काः,
समुद्गिरन्तो जयघोषमस्याः ।
उत्साहमापुर्जयिनः प्रवीराः,
स्वमातृभूमिप्रणयेन पूर्णाः ॥२३॥

हिन्दी—रानी "लक्ष्मीबाई" के सभी वीर, (युद्ध के लिये) उत्सुक हुए रानी की जयकार करते हुए, अपनी मातृ-भूमि के प्रति प्रेम धारण करते हुए, वे विजयी वीर, युद्ध के लिये उत्साह को प्राप्त कर रहे थे।

वधं कुर्वन्ती सा क्षणमपिरिपूणां न विरता,
प्रभा-पूर्णा राज्ञी तडिदिव च दृष्टारिपुभटैः ।
दिशं याता या या खलविदलनायाशुगमना,
कृता रिक्ता सा सा भयप्लुतमनोभी रिपुकुलैः ॥२४॥

हिन्दी—वह (रानी) शत्रुओं का वध करती हुई, क्षणभर भी नहीं रुकी। तेजस्विनी (वह) रानी बिजली की भाँति शत्रुओं के द्वारा देखी गई। वह शीघ्र गामिनी (रानी) युद्ध के लिये जिस जिस दिशा की ओर गई, भयभीत शत्रुओं ने उस उस दिशा को खाली कर दिया।

न तस्याः साम्मुख्यं क्वचिदपि रणे कोऽपि कृतवान्,
गतो यस्तत् पार्श्वं सपदि स तु यातो यममुखम् ।
भटा गौराङ्गाना निजबलमदोन्मादनिरता,
अहो ! धावन्तस्ते क्वचिदपि विलीना रणभुवः ॥२५॥

हिन्दी—युद्धस्थल में कहीं भी कोई भी उसका सामना न कर सका। जो उसके पास पहुँचा वह शीघ्र ही मृत्यु के मुख में चला गया। अंगरेज-सेना के जो भी वीर अपने बल के मद में लीन थे, आश्चर्य था, कि वे सब रणभूमि से दौड़कर कहीं जाकर छिप गये।

"काना" "मन्द्रा" समरकुशले ये च सख्यौ तदीये,
चक्राते ते तुमुल समरं देश-मुक्त्यै तदानीम् ।
शस्त्राघातं रिपुवधकरं तत्र सख्योर्निरीक्ष्य,
सर्वे योधा जय जयरवं प्रोचुरुच्चैः स्वरेण ॥२६॥

हिन्दी—युद्ध करने में कुशल, "काना" और "मन्द्रा" उसकी दोनों सखियों ने उस समय देश की स्वतन्त्रता के लिये भयंकर युद्ध किया। उस

(युद्ध) में शत्रुओं को मिटाने वाले उन दोनों मन्त्रियों के शस्त्र-प्रहार को देख-कर सभी योद्धाओं ने ऊँचे स्वर में उन दोनों (मन्त्रियों) का जय जयकार किया।

सख्याः प्रीत्या वपुषि ममतां जीवने चानुरागं,
हित्वा राष्ट्रप्रति हितधिया नैव याते विकारम्।
शत्रुव्रातैः कपटपटुभिर्मायया हन्यमाने,
कीर्ति लब्ध्वा धवल-धवलां देवलोकं प्रयाते ॥२७॥

हिन्दी—झाँसी वाली रानी के प्रेम के कारण उन दोनों ने अपने घर के मोह को (भी) भुला दिया, देश-प्रेम के कारण कहीं भी वे दोनों अपने मार्ग से विचलित नहीं हुईं। किन्तु कपट करने में चतुर शत्रुओं ने उन दोनों को छल से मार दिया। वे दोनों स्वच्छ कीर्ति को पाकर प्रसन्न हुईं, स्वर्ग सिधार गईं।

एकाकिनी हन्त ! चिराय राज्ञी,
श्रान्ता नितान्तं न शशाक योद्धुम्।
अश्वेन नव्येन विपज्जितेन,
क्रीडां कठोरां श्रयितुं न सेहे ॥२८॥

हिन्दी—खेद है कि अकेली रानी चिरकाल तक युद्ध करती हुई थक गई थी वह अब और युद्ध न कर सकी। (उधर) घोड़ा नया था, वह भी अड़ गया, युद्ध के मैदान में आगे नहीं सरक सका, (इसलिये) रानी (उस) युद्ध के खेल को न जीत सकी।

तदन्तरे कश्चन कूटनीत्या,
विभेद तां क्रान्तिमनुप्रकीर्णाम्।
शक्तोऽपि दुःशासनमाङ्गलानां,
नैवाऽपनेतुं प्रबभूव तस्मात् ॥२९॥

हिन्दी —उस बीच में किसी नीच (देश-द्रोही) ने सब ओर फैली हुई उस महा-क्रान्ति का भेद खोल दिया, इसलिये भी अंग्रेजी के बुरे शासन को रानी यहाँ से दूर न भगा सकी।

पदे पदे भारतवर्षमध्ये,
पैशुन्यमासीद् विततं जनेषु।
तेनैव राज्ञी धृतसाहसाऽपि,
बभूव हा! हा विफलप्रयासा॥३०॥

हिन्दी—भारतवर्ष मे पग-पग पर चुगलखोरी के तुच्छ भाव लोगो में फैले हुए थे, उसी कारण उत्तम साहस वाली होती हुई धैर्य धारण करने वाली भी रानी अपने प्रयास में सफलता प्राप्त न कर सकी।

समन्ततः शत्रुकृतैः प्रहारैः—
रशेषतः सा क्षत-विक्षताऽभूत्।
वीरोचितं मृत्युमवाप्तवत्या—
स्तस्या यशोऽभूद् विततं पृथिव्याम्॥३१॥

हिन्दी—चारो ओर से शत्रुओ के किये हुए प्रहारो से वह पूरी तरह घायल हो गई। (अन्त में) वीरो जैसी मृत्यु को पाकर वह धैर्यशालिनी (केवल) यश रूपी शरीर धारण करके पृथिवी पर प्रसिद्ध हो गई।

स्वातन्त्र्य-युद्धं प्रथमं प्रवृत्तं,
निरर्थकं यद्यपि हन्त! जातम्।
परं जनानां हृदयेषु तेन,
स्वातन्त्र्यमासीज्ज्वलितं विशुद्धम्॥३२॥

हिन्दी—निश्चय से भले ही उसका वह प्रथम स्वतन्त्रता का सग्राम खेद है कि निष्फल तो हो गया, किन्तु उसने (भारतीय) जनों के हृदयों में स्वतन्त्रता का विशुद्ध भाव जगा दिया।

'बुन्देलखण्डे' 'हरबोला' वीराः,
    कथामिमां संकथयन्ति नित्यम् ।
जानन्ति तामत्र जनाः समन्तात्,
    तद्विक्रमेणातितरां प्रसिद्धाम् ॥३३॥

हिन्दी—बुन्देलखण्ड मे 'हरबोल' क्षत्रिय वीर इस उपरोक्त कथा को प्रतिदिन कहते हैं, उस रानी की वीरता मे अत्यन्त प्रसिद्ध उस कहानी को यहाँ सभी लोग चारो ओर जानते हैं।

इह स्त्रीदौर्बल्यं जनगणमतं यच्च तममूत्,
    समाप्तं तद् देव्या घनतुमुलयुद्धेन भुवने ।
महाराज्ञी लक्ष्मीः सकलजननेत्री समभवद्,
    गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥३४॥

हिन्दी—इस ससार मे नारियाँ अबला हैं, यह लोगो के मुख से कही हुई बात, लक्ष्मीबाई के घनघोर, भयङ्कर सग्राम से झूठी सिद्ध हो गई। महारानी 'लक्ष्मीबाई' सम्पूर्ण भारतीय वीरो की पथ-दर्शिका नेता बनी। गुण पूजा के स्थान हैं, गुणवान व्यक्तियो मे लिङ्गभेद तथा आयु नही देखी जाती।

या क्रान्तिरासीद् विततात्र देशे,
    तस्यां समेताः सकलाः प्रवीराः ।
तज्जन्मदो "मङ्गल" इत्यथार्य-
    वीर्योऽभवत् कीर्तिविभूषिताङ्गः ॥३५॥

हिन्दी—सम्पूर्ण देश मे जो भी क्रान्ति (फैली) हुई थी, उसमे बहुत से वीरो ने प्रवेश किया था, उनमे जो वीर इस देश मे प्रसिद्ध हुआ है वह 'मङ्गल नाम का पाण्डे, विजयी हुआ था।

स ह्यङ्गलानां कटुनीतिरीत्या,
    तत्-सैनिकोऽपि प्रचुकोप तेभ्यः ।
तत्-क्रोधवह्निर्ज्वलितस्तथाऽऽसीद्,
    दग्धा यथा तेन विपक्ष-योधाः ॥३६॥

हिन्दी—जिसने अंग्रेजो की कुटिल नीति की रीति के कारण उनकी सेना मे प्रविष्ट होते हुए भी उन पर क्रोध प्रकट किया था, उसकी क्रोध की आग इतनी प्रदीप्त हुई कि उसने अंग्रेजो की सेना के बहुत से वीर योद्धाओ को मार दिया।

दुर्दान्त-शत्रूनसिधारयाऽसौ
संप्रापयन् मृत्युपथं सुधीरः।
अन्ते बभूव प्रण-पूर्ति-निष्ठः,
स्वतन्त्रताऽऽख्ये ज्वलने पतङ्गः ॥३७॥

हिन्दी—वह धीर अनेक भयकर दुष्ट शत्रुओ को तलवार की धार से काटता हुआ अन्त मे वह प्रणपालन करने मे तत्पर स्वतन्त्रतारूपी अग्नि का पतगा बन गया। अर्थात् वीरगति को प्राप्त हुआ।

'नाना'' 'तांत्या' ''जफर''-सहिता वीरमुख्यास्तदानीं-
कृत्वा युद्धं जनहितकरं स्वर्ययुर्मोदमानाः।
तेषां कीर्तिर्धवल-धवला भारते विस्तृतास्मिन्,
सर्वानस्मान् दिशतु सुपथं देशभक्तेः समन्तात् ॥३८॥

हिन्दी—उस समय ''नाना'' 'तांत्या टोपिये' बहादुरशाह' 'जफर'' बहुत से मुख्य-मुख्य वीर भारतीय जनता के हितकारक युद्ध करके प्रसन्न होते हुए स्वर्ग सिधार गये। इस भारतवर्ष मे फैली हुई उनकी स्वच्छ कीर्ति प्रतिदिन अच्छा मार्ग बताती रहे, तथा चारो ओर देश-भक्ति का पाठ पढाती रहे।

ये युध्यमाना निजमातृभूम्यै,
रणाजिरे मृत्युमवाप्नुवन्ति।
तेषां सुकीर्तिर्जगतीतलेऽस्मिन्
ज्ञेया गुणज्ञैः कविभिश्च गेया ॥३९॥

हिन्दी—जो वीर अपनी मातृ-भूमि के लिये युद्ध करते हुए रणाङ्गण में मृत्यु प्राप्त करते हैं, इस पृथिवी पर उनकी मृत्यु शानदार है। उनकी मृत्यु का गुणवान् लोग गुणगान करते हैं, और कवि लोग प्रशंसात्मक काव्य लिखते हैं।

सामान्यमृत्योर्बलिदान-मृत्युः,
श्रेयस्करो वर्तत एव लोके।
दीप्ति गतस्यापि विशोधितस्य,
हेम्नो महार्घ्यं किल भस्म तस्य ॥४०॥

हिन्दी—संसार में साधारण मृत्यु से बलिदान की मृत्यु कल्याण कारक ही होती है। (जैसे) चमकते हुए, अग्नि से शुद्ध किये हुए भी स्वर्ण (सोने) से निश्चय ही उसकी (सोने) की भस्म (राख) (स्वर्ण भस्म मकरध्वज) अधिक मूल्यवान होती है।

प्राप्ताः स्वराज्यं वयमद्य नूनं,
सत्साहसानां महतां प्रसङ्गात्।
दिवं गता वीरवरा महान्तः,
पुनन्तु नो निर्मलकर्मवृत्तैः ॥४१॥

हिन्दी—उन साहसी आप लोगों की सहायता से आज हम भारतीयों ने निश्चय ही स्वराज्य प्राप्त कर लिया है। हे स्वर्गीय वीरवरो! हम भारतवासियों को आप अपने सम्पूर्ण (उज्ज्वल) जीवन वृत्तान्त से पवित्र करें।

जान्हव्यां सलिलं यावद्, यावच्चन्द्र-दिवाकरौ।
स्थिरतां यातु वीराणां, तावत् पुण्यकथा-सरित् ॥४२॥

हिन्दी—जब तक भागीरथी गङ्गा में जल है, और जब तक चन्द्र और सूर्य (प्रकाशमान) हैं, तब तक वीरों की पवित्र कथा रूपी नदी (संसार) में स्थिर रहेगी।

# २ राष्ट्रवादी दयानन्द

मतैरनेकैः स घन स्वरूपै-
यंदा निलीनः शुचिवेदसूर्यः ।
स्वार्थे रता धूतजना अनेके,
प्राज्ञा बभूवुर्मिलितास्तदानीम् ॥१॥

हिन्दी—जब बादलों के समान अनेक मतमतान्तरों ने उस पवित्र वेदरूपी सूर्य को ढक लिया था, तब स्वार्थपरायण अनेक धूर्त बुद्धिमान् संगठित हुए।

ऋषि-प्रणीतेष्वपि पुस्तकेषु,
स्वकीयपाखण्डममेलयंस्ते ।
यमत्र देशेऽपि जना अनेके,
प्रामाणयन्नार्षमिवाल्पबोधाः ॥२॥

हिन्दी—ऋषि कृत अनेक ग्रन्थों में भी उन्होंने अपने पाखण्ड की बातें मिलाईं, जिस पाखण्ड को यहाँ (अनेक) देश में भी अनेक अज्ञानी मनुष्यों ने ऋषियों के वचन जैसा माना।

अस्पृश्यवर्णा विधवाश्च नार्यो,
"हा हेति" कृत्वा रुरुदुः समन्तात् ।
स्व संस्कृतिञ्चापि विहाय सर्वे,
सम्प्राप्य गौराङ्ग-गुरूनतुष्यन् ॥३॥

हिन्दी—अछूत और विधवा स्त्री, हाय हाय करके चारों ओर रो रहे थे, और अपनी भारतीय संस्कृति को सभी लोग छोड़कर अंग्रेज विद्वानों को गुरु रूप में प्राप्त करके सन्तुष्ट हो गये थे।

धर्मस्य तत्त्वं न विवेद सम्य-
गाडम्बरासक्तमना जनौघः।
हा वेदभाष्येषु बलिं पशूनां,
मनीषिणश्चापि समार्थयन्त ॥४॥

हिन्दी—समस्त जन धर्म-तत्त्व को अच्छी प्रकार नही जान रहे थे, सभी का मन आडम्बर मे आसक्त था। खेद था (विषय) था कि वेदों के भाष्यो मे यहाँ के विद्वान् भी पशु-बलि का समर्थन कर रहे थे।

ये भारतीया गुरवो जगत्याः,
कदाचिदासन् विदितार्थसाराः
हा हन्त ! पाश्चात्यविपश्चितस्ते,
प्रामाणयन् वैदिकभाष्यकारान् ॥५॥

हिन्दी—जो भारतीय विद्वान् कभी समस्त वेद के तत्त्व को जानने वाले थे, और संसार के गुरु थे, (एतद्देशप्रसूतस्य सकाशादग्रजन्मनः, स्वं स्वं चरित्रं शिक्षेरन्, पृथिव्यां सर्वमानवाः) खेद है कि वे ही भारतीय विद्वान् अंग्रेज वेद भाष्यकारों को प्रमाण मानने लगे।

मनीषिणां नैव सतामभावो,
बभूव यद्यप्यवनौ तदाऽस्याम्।
परन्तु तैः स्वार्थ-सुरां निपाय,
स्वयं स्वचैतन्यमहारि मोहात् ॥६॥

हिन्दी—यद्यपि इस भारतीय भूमि मे उस समय विद्वानो और सन्तो का अभाव नही था, परन्तु उन विद्वानो ने स्वयं मोहवश स्वार्थ रूपी मदिरा पीकर अपनी चेतनता को खो दिया था।

वैदेशिकैर्भारत-भूमिरेषा,
धनैर्विहीना विहिता वराकी।
या पूर्वमासीज्जननी समेषाम्,
क्षमा न सा सन्तति-पालनेऽद्य ॥७॥

हिन्दी—(उधर) विदेशियों ने इस बेचारी भारत-भूमि को धन वैभव से हीन कर दिया था, जो भूमि पूर्वकाल में सभी देशों की (अन्नपूर्णा) माँ थी, आज वह अपनी सन्तान को भी पालने में असमर्थ है।

इत्थं गते भारत-भूमिरेषा,
महान्तमात्मानमिवेप्स किञ्चित्।
युगानुरूपां जनिमेत्यमत्या,
प्रणाशयेदन्धतमं तमो यः ॥८॥

हिन्दी—ऐसी स्थिति के होने पर यह भारत-भूमि किसी महापुरुष की (उत्पत्ति को चाह रही थी, जो युग के अनुकूल जन्म लेकर (अपनी) बुद्धि से अज्ञान रूपी अन्धकार को मिटा दे।

युगानुरूपेषु, महाजनेषु,
को वा लघीयानथवा महीयान्।
महात्मनां को विदधीत साम्य,
"युगानुरूपा हि भवन्ति सन्तः" ॥९॥

हिन्दी—युग के अनुकूल महापुरुषों में कौन छोटा है, और कौन बड़ा है? महापुरुषों की (आपस) में बराबरी कौन कर सकता है? सन्त महापुरुष युग के अनुकूल ही जन्म लेते हैं। (वे महापुरुष परिस्थितियों के अनुकूल ही कार्य करते हैं।

एषां स्वराष्ट्रस्य च नायकानां,
पृथक्-पृथक् कार्यमवार्यमासीत्।
केचित्तु तीव्रा मृदुलाश्च केचित्,
तीव्राः प्रशान्ताश्च बभूवुरन्ये ॥१०॥

हिन्दी—इन अपने राष्ट्रनायकों का अपना २ अलग निश्चित कार्यक्रम था। कोई तो स्वभाव से तीव्र थे, और मृदु थे, और कोई (युग की आवश्यकताओं के अनुकूल) तीव्र और प्रशान्त-स्वभाव वाले थे।

अतो दयानन्दमहोदयोऽसौ,
युगानुरूपां जनिमत्र लेभे ।
यो भारतीयान् बहुरूढिवादान्,
वेद—प्रचारेण बहिश्चकार ॥११॥

हिन्दी—इसीलिये महान् दयानन्द ने युग के अनुकूल यहाँ जन्म पाया, जिसने भारत मे फैले हुए बहुत से रूढिवादों को वेद के प्रचार से दूर किया।

स्वजन्मभूमिं स तु गुर्जरात्ताम्
तत्रत्य भाषाञ्च रसादुपास्य ।
हिन्दी-गिरं देवगिरञ्च भक्त्या,
राष्ट्रोपकाराय सदा सिषेवे ॥१२॥

हिन्दी—उसने गुजरात देश को अपनी जन्मभूमि के रूप में प्राप्त किया, और वहाँ की भाषा को प्रेमपूर्वक ग्रहण करके (भी) भक्तिपूर्वक हिन्दी भाषा को और संस्कृत भाषा को (ही) भारत राष्ट्र के उद्धार के लिये सदैव सेवन किया।

स देववाणीं च समुन्नयंस्तु,
हिन्दी-गिरं भारतवाचमाह ।
हिन्दी-गिरा तेन निजाः प्रबन्धाः,
औदार्य-भावेन विनिर्मिताश्च ॥१३॥

हिन्दी—उसने संस्कृत की उन्नति करते हुए हिन्दी भाषा को राष्ट्रभाषा कहा। उसने अपने सभी ग्रन्थ (स्वयं गुजराती होते हुए भी) हिन्दी भाषा में लिखे।

स राष्ट्रभाषा- पदवीमिहाद्य,
हिन्दी-गिरं प्रापयितुं समर्थः ।
सोदारता धन्यतमा यया सः,
भाषा-विवादं शमयाम्बभूव ॥१४॥

**हिन्दी**—हिन्दी भाषा को यह राष्ट्रभाषा की पदवी दिलाने में समर्थ हुआ, धन्य थी (दयानन्द) की वह उदारता, जिस उदारता से उसने (अपने समय में) प्रान्तीय भाषाओं के विवादों को शान्त किया।

स्वराष्ट्र-भाषा निज-तन्त्रता तां,
नारी सुशिक्षामथ शूद्रतां स. ।
गवां सुरक्षा निज गौरवञ्च,
समुद्दधार स्वयमेक एव ॥१५॥

**हिन्दी**—उस अकेले ने ही राष्ट्रभाषा हिन्दी स्वराज्य-भावना, स्त्री-शिक्षा, अछूतोद्धार, गोरक्षा (इन सभी) को समुन्नत किया। (यह मत कहो कि जग में कर सकता क्या अकेला)।

स्व-राष्ट्र-रक्षा-व्रतिनोऽस्य तस्य,
दयोदय के ननु वर्णयन्तु ।
स्वहिंसकायापि धन प्रदाय,
प्रामोचयत्त दृढबन्धनाद्यः ॥१६॥

**हिन्दी**—अपने इस भारतराष्ट्र के रक्षाव्रती उस दयानन्द की अनुत्तम दयाशीलता का कौन वर्णन कर, जिसने अपने मारने वाले (जगन्नाथ नामक पाचक) को भी धन देकर उसे (कारागार) के कठोर बन्धन से छुड़ा दिया।

दत्तानि दु.खानि निजै परैश्च,
भुक्त्वापि नार्तः स तु जातु जातः ।
परं स्वराष्ट्रस्य विचार्य दैन्यम्,
क्लिश्यन् न निद्रा निशि संप लेभे ॥१७॥

**हिन्दी**—अपने और पराये जनों के द्वारा पहुंचाये गये कष्टों को सहन करके भी वह कभी दुखी नहीं हुआ, किन्तु अपने राष्ट्र की निर्धनता को विचार करके दुखी हुए उसने रात्रि में (भी) निद्रा प्राप्त नहीं की। (वह चिन्तित हुआ रातभर जागता ही रहा)।

अथ स्त्रियं कामपि पुत्रकं स्वं,
नग्नं मृतं वारिणि मोचयन्तीम् ।
निरीक्ष्य दीनां रुदतीं सशोकां,
खिद्यन् दयानन्द इदं बभाषे ॥१८॥

हिन्दी—इसके अनन्तर किसी स्त्री को अपने नग्न मृत पुत्र को (गंगा) के जल में बहाते (तथा) उस दीन रोती हुई शोकातुर को देखकर रोते हुए दयानन्द इस प्रकार बोले ।

"हा भारतीये वसुधे ! गतं ते,
लोकातिशायि क्व नु वैभवं तत् ।
स्वर्वासिनोऽपि स्पृहयन्ति यस्मै,
पटं मृतायाद्य न हा ! ददासि ॥१६॥

हिन्दी—हे भारतीय भूमि ! तेरा वह सारे संसार में अधिक वैभव (आज) कहाँ गया, जिस वैभव के लिये देवता भी तरसते थे । हाय ! आज तू मृत अपनी सन्तान को कफन भी नहीं दे सकती ।

'हा ! भारतीयवसुधे ! बहुधान्य-युक्तां,
लक्ष्म्या युतां भुवि जना भवतीं वदन्ति ।
हा ! तेऽद्य सन्ततिरियं म्रियते क्षुधार्त-
—रयूचे स वाष्प-चय-रुद्धवचःप्रसारः ॥२०॥

हिन्दी—खेद है कि हे भारतभूमि ! तू तो अनेक रत्नों वाली थी, धन से पूर्ण तुझे सभी लोग कहते थे, फिर आज तेरी यह भारत सन्तान भूख से व्याकुल क्यों मर रही है, वह दयानन्द आँसुओं के समूह से रुके वाणी के प्रसार वाला होकर यह बोल रहा था ।

हा ! भारतीय-वसुधे ! वसुभिर्युता प्राग्-
दारिद्र-यदानव-रुजा परिपीडिताऽद्य ।
रत्नान्यदीपिपत सौध-चयेषु यत्र,
दीपं न तत्र लभते जनता तवाद्य ॥२१॥

हिन्दी—खेद है कि हे भारत-भूमि ! तू तो रत्नों वाली थी, (तू) दरिद्रता रूपी राक्षस की व्याधि से पीडित है। तेरे महलों में (कभी) रत्नों के दीपक जलते थे, वहाँ आज तेरी जनता दीपक भी प्राप्त नहीं कर रही है।

वाणिज्यमद्य तव भारतवर्ष ! नष्टं,
यन्त्रादिकस्य तु कथैव कथा बभूव ।
आच्छादनं यत शरीर-कृते न लब्ध्वा,
प्राणांस्त्यजन्ति बहवोऽत्र जनाः प्रखिन्नाः ॥२२॥

हिन्दी—हे भारत ! तेरा वाणिज्य व्यापार भी नष्ट हो गया, तेरी वह यान्त्रिक-विकास की केवल कथा ही रह गई है। शरीर के लिये भी वस्त्र न पाकर कितने ही प्राणी खिन्न होकर प्राण त्याग रहे हैं।

येयं कृषिः सकलमिष्टफलं ददाना,
सूते स्म धान्यमधिकं जन-मोददात्री ।
अप्राप्य वृष्टि-सलिलादिकमद्य सैव,
संपीडयत्यतितरां जन-मानसानि ॥२३॥

हिन्दी—(सभी को) मनोवाञ्छित अन्न उत्पन्न करके देने वाली यह भारत की कृषि सबको प्रसन्न करने वाली, अत्यधिक अन्न देती थी, आज वह भी उचित समय पर वर्षा का जल तथा (खाद) आदि न पाकर, लोगों के मन को अत्यन्त पीडित कर रही है।

दृष्ट्वा स्वभारत-भुवं वसुभिर्विहीनां,
गौराङ्गदेव पतिभिश्चिरशोषिताञ्च ।
दासत्व-बन्धन युतां च रुदन् दयार्द्रो,
नो शान्तिमाप नितरां निजराष्ट्र-भक्तः ॥२४॥

हिन्दी—अपनी भारत-भूमि को धन से विहीन, तथा अंग्रेजों द्वारा चिर-शोषित एवं पराधीनता के बन्धन में बंधी देखकर निरन्तर रोते हुए दयालु राष्ट्रभक्त (दयानन्द) को शान्ति प्राप्त न हुई।

स्वराज्य-घोषं प्रथमं निशाम्य,
प्रावोधयद् राष्ट्रमिदं तपस्वी।
आन्दोलनं यन्निजदेश-वृद्धयै,
स एक एवैष चकार चारु ॥२५॥

हिन्दी—सर्वप्रथम इस साधु दयानन्द ने ही अपने देशवासियों को स्वराज्य (प्राप्ति) की ध्वनि को अच्छी प्रकार सुनाया। देश की उन्नति के लिए जो कुछ आन्दोलन थे, उन सबको इस अकेले ने ही ठीक प्रकार से किये।

स देश-राज्येषु गतागतस्त्वम्,
प्राप्त्यै स्वराज्यस्य चकार सर्वम्।
स्व वेद-भाष्येषु पदे पदेऽसौ,
स्वराज्यमानन्दकरं ववन्दे ॥२६॥

हिन्दी—वह जो देशी रियासतों में भ्रमण कर रहा था, वह सब स्वराज्य प्राप्ति के लिये कर रहा था, वह अपने द्वारा किये हुए वेदभाष्यों में स्थान-स्थान पर आनन्ददायक स्वराज्य की वन्दना करता था।

स्व प्रार्थनाभाषणलेखनेषु,
स्वराज्य-लाभान् समवर्णयच्च।
उद्देश्यमेतत् प्रविधातुकामः,
स्वराज्यमैच्छन्ननु सर्वतोऽपि ॥२७॥

हिन्दी—उसने अपने प्रार्थना-वचनों, भाषणों और लेखों में स्वराज्य के लाभों का वर्णन किया, इसी उद्देश्य को साधने की कामना वाले उसने सब ओर से स्वराज्य को ही निश्चय रूप से चाहा था।

सेयं विदेशीयकुशासनस्य-
च्छायापि नास्मासु हितावहा स्यात् ।
स्वर्गोपम चापि विदेश–राज्यम्,
त्याज्यं सदा सत्पुरुषैं पृथिव्याम् ।।२८।।

हिन्दी—"यह विदेशियों के दुःशासन की छाया भी हमें हितकर नहीं। स्वर्ग के समान भी विदेशियों का राज्य (अपनी) भूमि पर सज्जनों को त्याग देना चाहिए"।

स्वदेश-राजस्तु कुशासकोऽपि,
दुःशासनञ्चापि तदीय राज्यम् ।
विदेश-राज्याच्च विदेशराजात्,
एतद् द्वयं सौख्यकरं नराणाम् ।।२९।।

हिन्दी—"बुरा शासक भी अपने देश का राजा, तथा उसका बुरा भी शासन विदेशी राजा से और विदेशी शासन से, मनुष्यों के लिये (कहीं अधिक) सुखदायक है।

महीयसस्तस्य समस्तयत्नान्,
स्वराज्य-लाभाय विदन्तु सन्तः ।
सुधारभूतैर्निजसाधनैर्हि,
स्वराज्य-लाभः किल तस्य साध्यः ।।३०।।

हिन्दी—उस महान् (दयानन्द) के सभी प्रयत्नों को सन्त लोग स्वराज्य, प्राप्ति के लिये ही समझें, सुधार सम्बन्धी अपने अनेक साधनों से उस (दयानन्द) का साध्य निश्चय से स्वराज्य था।

सोऽयं दयानन्दमहानुभावः,
स्वराज्यवादी प्रथमो बभूव ।
धन्यौ तदीयौ पितरौ स याभ्याम्,
यतो दयानन्दसुतः प्रसूतः ।।३१।।

हिन्दी—इसलिए महानुभाव दयानन्द ही सर्वप्रथम स्वराज्यवादी (सिद्ध) हुआ, उसके वे माता-पिता धन्य हैं, जिन्होंने दयानन्द जैसे इस पुत्र को जन्म दिया था।

यस्तत्याज गृहञ्च वैभव-भृतं, स्निग्धं कुटुम्बं क्षणा-
दाभृत्योर्वदनञ्च यस्य पितरौ, नो दृष्टवन्तौ क्वचित्।
नित्यं यः प्रविहाय मोहमखिलं, राष्ट्रस्य भक्तौ रतो,
यस्यानन्द इयाय नाम्नि परता, पूर्वा दयैवाभवत् ॥३२॥

हिन्दी—जिसने वैभवयुक्त घर को तथा स्नेह करने वाले कुटुम्ब को क्षण-भर में त्याग दिया था, ग्राजीवन जिसके मुख को कहीं भी उसके माता-पिता न देख सके। जो सम्पूर्ण मोह त्यागकर राष्ट्र की भक्ति में लग गया, जिसके नाम में बाद में, ग्रानन्द है, ग्रौर प्रथम दया है। ग्रर्थात् दयानन्द।

दयानन्दः साधुः सकल-जन-मुक्त्यै समभवत्,
तदीया ग्रादर्शाः, निज भरत-भूम्यै हितकराः।
गुरोर्भक्तिस्तस्य, स्मरणसुखदा भाति सततम्,
स्वराज्यार्थी स्वामी, विलसति दयानन्द इह सः ॥३३॥

हिन्दी—साधु दयानन्द का (ग्राविर्भाव) सभी जनमात्र की मुक्ति के लिये हुग्रा। उसके ग्रादर्श कार्य ग्रपनी भारत-भूमि के लिये हितकर हुए। स्मरण करने से सुखदायक उसकी गुरु-भक्ति भी संसार में प्रकाशमान हो रही है। वह स्वराज्य की कामना करने वाला दयानन्द यहाँ प्रकाशित रहेगा।



3

# लोकमान्यबालगङ्गाधरतिलकः

स्वातन्त्र्यं नः सकलसुखदं जन्म-सिद्धोऽधिकारो,
लब्ध्वैवेदं विकलहृदये शान्तिरुत्पत्स्यते मे ।
सर्वा आशा घन इव गिरा गुंजयामास यो वै,
लोकमान्यं पुरुषतिलकं तं न को वेत्ति सम्यक् ।।१।।

हिन्दी—सबको सुखदायक स्वराज्य हमारा जन्मसिद्ध अधिकार है, इसको प्राप्त करके ही मेरे व्याकुल हृदय में शान्ति उत्पन्न होगी, सारी दिशाओं को बादल जैसी गर्जना से जिसने निश्चय से गुंजा दिया था, उस लोकमान्य पुरुष तिलक को कौन अच्छी प्रकार नहीं जानता ?

निशम्य यस्य श्रवणीयजीवनं,
बुधाः सुधायामपि नो रसं विदुः ।
यदीय चित्रञ्च विलोक्य बालका,
स्वदेश-भक्त्यै दधते रुचि हृदि ।।२।।

हिन्दी—श्रवण करने योग्य जिसके जीवन चरित्र को सुनकर विद्वान् लोग अमृत में भी स्वाद अनुभव नहीं करते, (विद्वानों को जितना आनन्द उसके जीवन चरित्र को सुनकर आता है, उतना आनन्द अमृत में भी नहीं मिलता) और जिसके चित्र को देखकर बच्चे देशभक्ति के लिये हृदय में रुचि धारण करते हैं। (बच्चों में स्वदेश-भक्ति की भावना जाग जाती है)।

यत्ने भगीरथ इव प्रणपूर्ण चेता,
यस्तेजसा परशुराम इव प्रतीतः ।
यो नैष्ठिकः कुरुपितामह एव साक्षाद्,
योगेशकृष्ण इव धीरमतिर्बभूव ।।३।।

हिन्दी—जो पुरुषार्थ करने में प्रणपूर्ण चित्त वाला राजा भगीरथ के समान था, जो तेज के द्वारा परशुराम के समान जाना जाता था, जो ब्रह्मचर्य पालन करने में भीष्म पितामह के समान प्रत्यक्ष (दिखाई) देता था, जो योगेश्वर भगवान् कृष्ण के समान स्थिर बुद्धि वाला था।

विभ्राजमानमनिशञ्च यदीय धाम,
सूर्यांशुजालमिव सर्वजनैः प्रतीतम्।
यस्य प्रभाव-युत भाषण-चातुरीषु,
रेमे सदैव जनता मुदमादधाना ॥४॥

हिन्दी—निरन्तर चमकता हुआ जिसके (मुख) का तेज सूर्य की किरणों के समूह के समान सबको प्रतीत होता था। जिसके प्रभावशाली भाषण की चतुरता में प्रसन्नता धारण करती हुई जनता सदैव रम जाती थी।

बाल्ये विलोक्य दधतं धिषणा-विकासं,
वृद्धोचितैर्गुण-गणैश्च विराजमानम्।
विद्यालये गुरुजनाः सममन्त्रयन्त,
बालो भविष्यति सुराष्ट्र-विधायकोऽसौ ॥५॥

हिन्दी—बचपन में बुद्धि के विकास को धारण करते हुए और वृद्धों जैसे गुण गणों से विराजमान जिसको देखकर, विद्यालय में सभी गुरुगण यह मन्त्रणा किया करते थे कि यह बच्चा भविष्य में होनहार (अपने राष्ट्र का निर्माता होगा)।

प्रश्नोत्तरं स गणितस्य जगाद वाचा,
नैच्छत् कदापि निज-पुस्तक-पट्टिके वा।
स्मृत्वा सुभाषितमयं बहुपद्यजातम्,
गीर्वाण-वाचि निदधे परमं पटुत्वम् ॥६॥

हिन्दी—वह गणित के प्रश्नों का उत्तर जो लिखकर दिया जाता चाहिये था) मौखिक ही बता देता था, कभी भी पोथी या सलेट की इच्छा नहीं करता

था, अनेक सुभाषित युक्त (संस्कृत) भाषा के श्लोकों को (बचपन) में ही कण्ठस्थ करके देवभाषा संस्कृत के ज्ञान में अत्यन्त पटुता प्राप्त कर लेता था।

दैवीं गिरञ्च समधीत्य तदीय-चित्ते,
देशस्य भक्तिरति तीव्रतरा दिदीपे।
यस्या गिरस्तु कृपया ह्यमरः स जातः,
ते वै मृता नु कथयन्ति मृतां नु तां ये ॥७॥

हिन्दी—देववाणी संस्कृत भाषा को पढ़कर उसके चित्त में देश-भक्ति की (ज्योति) अत्यन्त चमक उठी। जिस अमर वाणी की कृपा से आज (मरकर) भी वह अमर हो चुका है, उस अमर वाणी संस्कृत भाषा को जो मृत भाषा कहते है, वे स्वयं मर चुके है।

पापं महन्निवसनं परकीय-राज्ये,
मुक्तिस्ततः सपदिधर्मधिया विधेया।
अन्यायकर्तृ-पुरुषादधिकः स पापी,
योऽन्याय-जालपतितोऽपि न मुक्तिमिच्छेत् ॥८॥

हिन्दी—पराये राज्य मे रहना महापाप है" धर्मात्मा को उससे शीघ्र ही मुक्ति प्राप्त करनी चाहिये। अत्याचार करने वाले से वह मनुष्य अधिक पापी है, जो अन्याय-जाल मे फँसा हुआ (वहाँ से) मुक्ति नहीं चाहता।

वैदेशिका नृपतयः कथमत्र राज्यम्,
कुर्वन्तु शश्वदिति तल्लिखितैः स्वलेखैः।
गौराङ्गदेशपतयः कुपितास्तमस्माद्,
देशाच्चिराय तिलकं निरवासयंस्ते ॥९॥

हिन्दी—"विदेश के राजा यहाँ राज्य क्या करें" इस प्रकार निरन्तर उसके द्वारा लिखित लेखो से कुपित होकर उन अंगरेज शासकों ने उस 'तिलक' को इस देश से चिरकाल के लिये निर्वासन दण्ड दे दिया।

यस्योग्र-वाचाऽऽङ्गल-शासकास्ते,
भयादभूवन् व्यथिताः समन्तात् ।
उद्घोषकोऽभूत्-निजतन्त्रतायाः,
स बालगङ्गाधरलोकमान्यः ॥१०॥

हिन्दी—जिसकी उग्र (प्रचण्ड) वाणी से वे अंगरेज शासक भय से चारों ओर काँप गये थे, वह स्वराज्य-भावना का उद्घोषक बालगंगाधरलोकमान्य तिलक था।

तद् भावनां लोपयितुं च ते तं,
व्यदण्डयन् हन्त ! चिराय काराम् ।
परन्तु शक्ता अपि भारतांशे,
कर्तुं बहिः राष्ट्रियतां न शक्ताः ॥११॥

हिन्दी—उनकी (राष्ट्रीय) भावना लुप्त करने के लिए उस तिलक को उन (अंगरेजों) ने चिरकाल का कारावास का दण्ड दिया किन्तु वे लोग भी उनकी (देश में फैली हुई) राष्ट्रीय भावना को (भारत) से बाहर निकालने को समर्थ न हुए।

पदे पदे राष्ट्रपितामहस्य,
घोषस्तथयं व्यापकतामगच्छत् ।
सुप्तोत्थितं भारतमाशु येन,
स्वातन्त्र्य-गीतानि जगौ जगत्याम् ॥१२॥

हिन्दी—पग-पग पर उस राष्ट्र-पितामह (बाबा) की (राष्ट्रीय भावना) की आवाज (देश में) फैल गई, जिससे सोकर उठा हुआ भारत संसार में स्वतन्त्रता के गीत गाने लगा।

अथैकदा तस्य कलत्र-मृत्युं
काराधिपस्त तिलकं यदाऽऽह ।
न चंचलतस्तं स्खलितं निरीक्ष्य,
सविस्मयं तं स तदा जगाद ॥१३॥

हिन्दी—इसके पश्चात् एक दिन उस (तिलक) की पत्नी की मृत्यु के समाचार) को जेल के अधिकारी ने (आकर) उससे कहा, किन्तु उसको धैर्य-विहीन न देखकर आश्चर्य से युक्त जेलर तब (यों) बोला।

इमे त्वदीये नयने विहीने,
दृगम्बुभिः किं वद लोकमान्य !
श्रुत्वापि यत्त्वं निधनं स्वपत्न्याः,
जहासि नाश्रूणि न यासि मोहम् ॥१४॥

हिन्दी—हे लोकमान्य ! ये तेरे दोनों नेत्र आँसुओं से खाली क्यों हैं बता तो सही। जो तू स्वपत्नी की मृत्यु को सुनकर भी न आँसू बहाता है और न मोह को ही प्राप्त हुआ है।

तं प्रत्यवादीत् परमार्थतस्त्वं,
न वेत्सि नूनं तिलक सखे ! माम्
स्फुटं महत् कारणमत्र विद्धि,
यन्नारुदम्–दारुणहेतुनाऽपि ॥१५॥

हिन्दी—(तिलक) उससे बोले, हे मित्र ! तुम वास्तव में मुझ तिलक को निश्चय रूप से नहीं जान सके, स्पष्ट ही इस विषय में बहुत बड़ा कारण है, जो मैं इस कठिन स्थिति में भी नहीं रोया।

ताम्यत्कण्ठं ननु निशि-दिने, प्रारुदम् नित्यशोयत्,
क्लेशैः क्लिष्टां परवशगतां देशभूमिं निरीक्ष्य।
तेन क्षीणं नयन-सलिलं पूर्वमेवाधुना का,
चर्चाऽश्रूणामिति स तिलको धीरधर्मस्तमूचे ॥१६॥

हिन्दी—अनेक क्लेशों से सताई हुई, पराधीनता को प्राप्त हुई भारत-माता को देखकर, मैं जो गद्गद् कण्ठ से रात दिन प्रतिदिन (इतना) रोया हूँ, उसके कारण मेरे आँसू पहले ही सूख गये हैं, अब तो आँसुओं की चर्चा करना

ही व्यर्थ है, (अर्थात् मेरे आँसू सूख गये हैं,)। अब कहाँ से और आँसू लाऊँ ? इस प्रकार धैर्यधनी तिलक उस जेल में बोले।

गोपालकृष्णेन सुदुग्धपूर्वं,
गीताख्यदुग्धं यदिह प्रसिद्धम्।
निर्मथ्य युक्त्या तिलकस्तदेव,
गीतारहस्य नवनीतमाप ॥१७॥

हिन्दी—यहाँ जिस अत्यन्त प्रसिद्ध गीतारूपी दूध को गोपाल कृष्ण ने पहले दुहा था, तिलक ने युक्तिपूर्वक उस (गीतारूपी दूध) को, मथकर गीतारहस्य रूपी नवनीत (मक्खन) प्राप्त किया, (गीतारहस्य) लोकमान्य तिलक का (गीता-भाष्य के रूप में लिखा हुआ कर्मयोग का सर्वोत्तम ग्रन्थ है, जिसे उन्होंने ६ साल के कठोर कारावास (मांडले) नामक स्थान में लिखा था।

तद्भाष्यमालोक्य जनाः सुरम्यं,
स्वकर्म-निष्ठा निजदेश-भक्ताः।
वैदेशिकानां निगडैर्निबद्धां,
चक्रुर्विमुक्तां निजदेश-भूमिम् ॥१८॥

हिन्दी—उस रमणीय गीतारहस्य नामक गीताभाष्य को देखकर अनेक देशभक्त भारतीय जन अपने २ कर्तव्य कर्म में लग गये और उन सबने (मिल-कर) विदेशियों के बन्धनों में बंधी हुई अपनी भारतभूमि को मुक्त किया।

हे हे ! प्रकाण्डबुधमौलिमणे ! महात्मन् !
त्वं लोकमान्य इति लोक-सुदत्तमान !
पूतानि ते सुवचनानि वयं स्मरन्तो,
राष्ट्रस्य भक्तिमिह चेतसि धारयेम ॥१९॥

हिन्दी—हे विशिष्ट विद्वानों में शिरोमणि ! महापुरुष ! तुम्हें लोगों ने लोकमान्य की पदवी से विभूषित किया था, हम तेरे पवित्र वचनों को याद करते हुए इस देश में अपने चित्त में राष्ट्रभक्ति को धारण करते रहें।

महाराष्ट्रे जन्म व्रतिवर ! विरेजे यदपि ते,
परं सर्वोऽप्येष श्रयतु मम देशः स्वविभुताम् ।
अमुष्मिंस्ते लक्ष्ये त्वसुभिरपि रक्ष्येऽद्य कृतिनाम्,
प्रपश्यद् राष्ट्रन्ते पद-कमलमन्तेऽर्चति मुदा ॥२०॥

हिन्दी—हे देश-भक्ति का व्रत धारण करने वालों में श्रेष्ठ ! यद्यपि तेरा जन्म महाराष्ट्र प्रदेश में हुआ था, परन्तु (तुम्हारी यह भावना थी) कि यह समस्त भारत अपने स्वराज्य को प्राप्त करे, वीरों के प्राणों से सुरक्षित आज तेरे इस (स्वतन्त्रता रूपी) लक्ष्य को पूर्ण देखकर यह समस्त भारतराष्ट्र अन्त में प्रसन्नता से तेरे चरण कमलों में प्रणाम करता है। (आज जब स्वराज्य प्राप्त हुआ, तो तिलक स्वर्ग चले गये, इसलिये सभी भारतराष्ट्र उन्हें प्रणाम करके अपनी कृतज्ञता प्रकट कर रहा है)।

# ४ महामनाः पं० मदनमोहनमालवीयः

स्वजन्मना येन कुलं द्विजस्य,
कृतं पवित्रं गुणिनां वरेण ।
[illegible] प्राप्य वाणी वरदा प्रसन्ना,
जयत्यसौ पण्डितमालवीयः ॥१॥

हिन्दी—गुणियों में श्रेष्ठ जिस (मालवीय) ने अपने जन्म से ब्राह्मण-परिवार को पवित्र कर दिया। वर देने वाली सरस्वती जिसे प्राप्त करके प्रसन्न हो गई, वह पण्डित मालवीय विजयी (सर्वोत्कृष्ट) है।

दैवीं गिरं प्राक् समधीत्य तेन,
ततश्च भाषा विविधा अधीताः ।
न स्वार्थसिद्ध्यै, जन-मङ्गलाय,
तेन प्रयुक्तो विविधः स्वबोधः ॥

हिन्दी—पहले उसने संस्कृत भाषा को पढ़कर तत्पश्चात् अन्य भाषाओं का सम्पूर्ण ज्ञान प्राप्त किया, उसने शिक्षा सम्बन्धी ज्ञान सबका अपनी स्वार्थ-सिद्धि के लिये प्रयुक्त न करके मनुष्यमात्र के कल्याण के लिये प्रयुक्त किया।

महामना वस्तुत एव सोऽभूत्—
च्चिराय लोकोपकृतौ स रेमे ।
गृहीतविद्यो विनयैकवित्तो,
सदैव विद्याऽभ्यसने प्रवृत्तः ॥३॥

हिन्दी—वास्तव में ही वह महात्मा (बड़े मन वाला) था, वह चिरकाल तक जनता के कल्याण में लगा रहा, विद्या ग्रहण किये हुए, विनय का एकमात्र धनी विद्या में सदा रमण करता था।

सदाननं सुस्मितमेव तस्य,
सौम्यं प्रशान्तं सुखदं व्यलोकि ।
महर्षि कल्पं तमवाप्य देशो,
कृतार्थतामेव सदैव मेने ॥४॥

हिन्दी—उसका मुखमण्डल सबने मुस्कान युक्त, सुशील-शान्त सबको सुख देने वाला ही देखा । समस्त देश ने महर्षि के समान उसको पाकर सदा अपने को कृतार्थ माना ।

जितेन्द्रियो बाह्यशुचिर्महात्मा,
विधाय भाले तिलकं विशुभ्रम् ।
दिव्याननः श्वेतपटैर्युतोऽसौ,
हिमेन शुभ्रो हिमवानिवासीत् ॥५॥

हिन्दी—भीतर और बाहर से पवित्र वह महात्मा मस्तक पर सफेद तिलक लगाकर सफेद (खादी) के वस्त्रों से सिर से पैर तक, बरफ से ढके हुए हिमालय के समान स्वच्छ शोभायमान होता था ।

हिन्दुत्वभावंकरसोमहात्मा,
सदाऽन्त्यजान् बन्धु-समान् ददर्श ।
विद्यालयाज्जातु शिवालयात्तान्,
न्यवारयन्नैव महामनाः सः ॥६॥

हिन्दी—हिन्दुत्व भावना से ओतनिष्ठ होता हुआ वह महात्मा सदा अछूतों को समान भाव से देखता था, उस महामना ने उन अछूतों को विद्यालय से तथा शिवालय में आने से नहीं रोका था ।

आन्दोलने भारतवर्षमुक्तै—
महात्मनः प्राणमितन्मुदा सः ।
स्वदेशमुक्त्यै कृतिधा मनीषी,
कारागृहातिथ्यमवाप धीरः ॥७॥

